कनकांगदशृंखलां वबंध
स्खलितात्मानमिव स्थितं च बाह्वोः।
नखरश्मिनिर्गमच्छलेन
प्रचुरं पाणितलादिव क्षरंतम्॥ १९॥

श्रवसोरिव दीर्घलोचनाभ्यां
धवलापांगरुचा निपिच्यमानाम्।
तनुजन्मतयैव मुग्धवृत्तिं
स्थिरमारुह्य निविष्टमंसदेशे॥ २०॥

निकटस्थगभीरनाभिकूपं
नमदग्रं वलितं कृशिम्नि मग्नम्।
स निपातमवेक्ष्य मध्यदेशं
कृपयेव स्थगयंतमुल्लसंतम्॥ २१॥

मसृणं मृदुंवरावरुद्धं
सुरसिंधोरिव सैकतं गरीयः।
रमणीयतयैव सोपभोगं
जघनं मच्छदिनारमलाअंतम्॥ २२॥

तरुणीः परिणीय ताः स भोगी
पृथु लावण्यमयं गुणं दधानाः।
मदनं समुपाश्रितं पुपोष
प्रकृतिस्तस्य हि संश्रिताभिरक्षा॥ २३॥

सचिवैरभिषिच्य योवराज्ये
तनयं वर्महरं विभज्य राजा।
चिरमुद्वहनादिवातिखिन्नो
निदधौ तत्र धुरं वसुंधरायाः॥ २४॥

अविहाय महीदामाश्रयंती
१ युद्ध युवराजे चिरकाम राज्यलक्ष्मीः।

सहकारमिवाऽवगाहमाना
सुरभिश्रीः सविकासचंदनस्था ॥ २५ ॥

अचिरागतयौवराज्यसिद्धे—
र्नृपसूनोः क्रमतो दिदृक्षयेव ।
ऋतवस्तमुपासदन् यथास्थं
प्रसवोपायनसंप्रदानपूर्वम् ॥ २६ ॥

अवबुध्य निजात्ययं विषादाद्
रुदितायाः शरदो हिमागमादौ ।
भृदामश्रुलवैरिव प्रसक्तै
हिमबिंदुप्रकरैर्विचलत्पारे ॥ २७ ॥

शरदः सुहृदो लयेन खेदा—
च्चलितायाः सुतरां मरालपंक्तेः ।
धुतपक्षतिनिर्विकीर्यमाणं
तुहिनं तूलमिवांबरं व्यगात्मीन् ॥ २८ ॥

हिमशीतलवातसंनिपाता—
दिव भीत्या श्लथमंघिजीर्णपर्णैः ।
वसुधाप्रदरोदरेषु चक्रे
तरुदासाः प्रविमुच्य सन्निवेशः ॥ २९ ॥

समये हिमवर्षिणि स्वहेति—
प्रमयम्लानिभयादिवांगजात्मा ।
अमनागविशन्मनःकुटीरं
युवराजस्य पुरे कृशोदरीणाम् ॥ ३० ॥

दिशि दिश्युपचेयमानमूर्ति—
र्नृपसूनोरिव दायुर्भानचित्तैः ।

१—आसम् । २ वासः ।

शिशिरः स हिमर्तुरेव जज्ञे
विरहस्त्रीहृदयप्रकंपकारी ॥ ३१ ॥

इतरेतरकुट्टनक्कणद्भि—
र्दशनैः सत्रभुजस्य शीतकंपाः ।
ज्वलदग्निसदः प्रथामभङ्गा—
मविशन् कर्पटिनः सवेगमंते ॥ ३२ ॥

निशि निघ्नतया हिमं निपीय
प्रचुरं प्रातरिदं वपुर्व्यजीर्णम् ।
अवमत्रिव वर्तुलस्थवीयं
प्रसवच्छलतया मधूकवृक्षाः ॥ ३३ ॥

सर्वयोषितः स्वपत्रनेत्रै—
स्तुहिनांशुप्रमुखाश्च तीरवृक्षाः ।
भृशमन्वरदन्निवात्मनीनं
हिमभग्नं कमलाकरं प्रभाते ॥ ३४ ॥

शिशिरांगतया करीषजाग्नि
सह वत्सैः परिवृत्य गोपडिंभाः ।
व्युदतप्सत मंप्रसार्य वाहून्
दिवसादौ नगराद् वहिस्सजल्पाः ॥ ३'

वनिताजनमानशल्यशैलं
प्रणुदन् जीर्णमिवाशु पर्णजालम् ।
प्रथमेऽहनि देहकांतिहारी
पवमानः प्रववौ मधूकगंधिः ॥ ३६ ॥

असहिष्णुरिवेक्षितुं नलिन्याः
किल तत्कालदशागतं निकारम् ।

---

१ पक्षिण ।

विनिमील्य निजप्रतापनेत्रं
    द्युपथं धर्मरुचिर्लघु प्रतस्थे ॥ ३७ ॥

हिमभीरुतयेव भावनीयं
    प्रविमुच्यातपमाश्रितावकाशम् ।
वनितास्तनमंडलेषु तस्थौ
    सघनप्रावरणेषु बाढमूष्मा ॥ ३८ ॥

गुणमच्छतया तुषारदोषा—
    दुलभं बंबरवस्त्रवांबराणि ।
नयकंबलविक्रयस्तु लाभे
    प्रददौ मूल्यचतुर्गुणं वणिग्भ्यः ॥ ३९ ॥

मणिदीधितदीपिकाप्रकाशे
    निशि कालागरुपिंडधूपगर्भे ।
विनिवेशितहंसतूलशय्या
    पुलिने गर्भगृहे सहेमभित्तौ ॥ ४० ॥

अवतंसितमालतीसुगंधि—
    विलसत्कुंकुमपंकदिग्धगात्रः ।
वनिताभुजपंजरोपगूढो
    युवराजदिशिरं स निर्विवेश ॥ ४१ ॥ कुलकम् ॥

ऋतुना समयेन तेन तीव्रा—
    दिव पद्माधिपनंदनप्रभावात्[१]
विजहे बलयं दिशामदोषं
    कृतपद्मालयवैभवक्षयेण ॥ ४२ ॥

शिशिरस्तरुपंडविप्लवानां
    स विधाता क नु वर्तते दुरात्मा ।

---

१ सूर्यः । २ वसंतः ।

पटुकोकिलकूजितैर्वसंतो
वनमित्याह्वयतीव संप्रविष्टः ॥ ४३ ॥

अनुरागकृतः सुगंधिसृष्टेः
सुरभेस्तस्य नवेन संगमेन ।
अभवन् वनवल्लयः सपुष्पां
नृपसूनोश्च कुलीनराजकन्याः ॥ ४४ ॥

भुवनैकजयोत्सवाय कंतो—
रिव भृंगीजनमंगलस्वनौघैः ।
मधुना विधिनार्पितांकुरश्री—
रजनिष्टद्रुमयष्टिपालिकासु ॥ ४५ ॥

विटपेषु विरेजिरे विरूढाः
कलिकाः स्थूलदलावतुद्रुमाणाम् ।
शरधिष्विव पत्रमात्रदृश्याः
कुसुमेषोर्विजयैषिणः शरौघाः ॥ ४६ ॥

कलिकादलनोन्मदाः सहेलं
सहकारोद्गमगुच्छगर्भशय्याः ।
जघुषुः स्मरसंनिपातमूर्छा—
मिव पांथस्य नितांतमन्यपुष्टाः ॥ ४७ ॥

मधुरध्वनितश्रवाभितुष्टा
इव भूलद्रुमयष्टयस्समृद्धाः ।
कुसुमस्तवकानुतर्पपूर्ण
मधु सस्वादमधीधपन् द्विरेफान् ॥ ४८ ॥

न पतद्भिरुदासिरे समंतात्
कुसुमस्थानि रजांसि वल्लरीणाम् ।

---

१ पक्षे—रजस्वलाः २ कामस्य ।

मदनस्य शिलीमुखैरनस्था—
न्यपि तस्मिन् समये मनस्विनीनाम् ॥ ४९ ॥

विजिहासुरिवासहिष्णुरंगै-
र्विरहिस्त्रीश्वसितोपतापमूढम् ।
पवनः प्रविवेश दाक्षिणात्यो
द्रुमवीथीशिशिरं वनोपकंठम् ॥ ५० ॥

धुतपल्लवपाणिमाधवीना—
मभिरेभे प्रसवाननाभिचुंबी ।
प्रततीभवनं प्रविश्य वायु—
र्विविधालिंगनविभ्रमप्रयोगः ॥ ५१ ॥

पथिका मरुतः शरीरसंगं
वनवल्लीकुसुमस्पृशः सुगंधेः ।
विषवेगमिवावबुध्यमानाः
बत जेपुः मदनाभिधानमंत्रान् ॥ ५२ ॥

मलयानिलनिर्धुतैः परागैः
प्रनिरुद्धं सहकारमंजरीणाम् ।
अनवेत्य वने ककुब्विभागं
परिबभ्राम जनश्चिरं प्रवासी ॥ ५३ ॥

सुरभिश्वसनेन नलिनाया—
सरिदम्भोरुहवल्लेन पुष्पवत्याम् ।
नवकेसरगुल्मलस्पर्शेन
प्रजगे किंनरयोर्युगेन हृद्यम् ॥ ५४ ॥

वकुलस्य किरातकामिनीनां
सुरसमुक्तं मधु संप्रपद्य कुहूः ।

१ विरहिण । २ रुतः ।

मधुपैरनुपातिभिः सिषेवे
नतु सख्यं सुकरं समानशीलैः ॥ ५५
शतधा दलितं वियोगिनीना—
मिव कांतारविरूढमल्लिकानाम् ।
दिशि दिश्युपचिक्षिपे मरुद्भि—
र्मतिवैशद्यमिव प्रसूनवृंदम् ॥ ५६ ॥
वरचंपकयष्टिरातताना
प्रसवस्तोमपिशंगिमावरुद्धा ।
कुपितस्मरवह्निवृष्टिरेषे—
त्यवदानं धृतिमंथि पांथबुद्धौ ॥ ५७ ॥
मलयश्वसनोपनीतनाना—
प्रसवामोदिनि शुभ्रसौधपृष्ठे ।
वनितानिवहेन सायमह्नः
स विनोदं समवेत्य वज्रनाभः ॥ ५८ ॥
मृदुगीतिमुदस्तहेमरज्ज्वा—
यतदोलामणिपीठदेवतानाम् ।
स्वगुणग्रहणानुबंधर—
मश्रृणोद्भ्यधुरस्य ·
नृपनंदनभोगसंप्रवेशात्
कृतकृत्येव मनोज्ञमाधव
विगलत्कुसुमान्यवर्त्ततोयन्—
नवधर्मांबुलवोपपन्नपृष्ठा
विधिनोपनताग्निदाघशापा—
दतितीव्रादिव लुब्धकाग्नियेव ।
प्रविमुच्य वनं प्रसूनसंप—

मृदुसुप्तिरनेकनागकन्या—
कृतभोगः प्रसृते तु घर्मकाले ।
विजहौ मलयं न मातरिश्वा
शिशिरं चंदननिर्झरांबुपातैः ॥ ६२ ॥

सुरभेर्निजसंमदैकहेतो—
र्विरहे दुःखमिवाधिकं दधानैः ।
जगृहे वनकोकिलैर्न मौनं
न पुनस्तत्समयागमावसानम् ॥ ६३ ॥

विविधद्रुमशाद्वलानि मधुः
प्रसवोद्धस्तजनांतवाटकानि ।
विनिवृक्षगतस्य दूरदिग्भ्यो
मधुराजस्य चमूनि वैरलीलाम् ॥ ६४ ॥

तपतापभियेव तीरवृक्ष—
व्रजतिर्यग्विधिनांधकारितेषु ।
विरमय्य चरप्रभावमस्थुः
पृथुलागाधमहाह्रदेषु नद्यः ॥ ६५ ॥

अतिदीर्घपथभ्रमादिवार्के
परिसृग्यांशु पिवत्यशेषदिग्भ्यः ।
चकितैरिव भानुवर्त्म हित्वा
क्वचिदप्यंबुधरैस्तिरोबभूवे ॥ ६६ ॥

रसशून्यतया विदारितास्या
वदनोद्भ्रांतरजोवितानधूम्राः ।
अभवन् ककुभो निदाघरूक्षाः
पथि राक्षस्य इवासुमद्विभीत्यै ॥ ६७ ॥

---

. दिशः ।

विरसाः परुषस्पृशः सशोषाः
पथिकोद्वेगकृतो निरूढतापाः ।
जहिरे महिजैर्जरत्पलाशाः
शुचिमासस्य लवा इवांगलग्नाः ॥ ६८ ॥

बहलोत्थितधूलिपाटलिम्ना
ककुभः काञ्चन संश्रिता विरेजुः ।
तरणेरिव तापतो विवृद्धाद्
दलितोरःक्षरितप्रवाहरक्ताः ॥ ६९ ॥

घनितानयनाभिरामलीला—
गुणचौर्यादिव दोषतो जनांतः ।
अभिशंक्य न शिश्रिये कुरंगैः
प्रविमुच्यापि वनं दवाग्निभीत्या ॥ ७० ॥

शिशिरा मुमु नक्तमालवीथी—
हतमध्यंदिनभानुभाप्रवेशाम् ।
वसुधामधिशिश्यिरे महिष्यः
कृतरोमंथनवक्रमुक्तफेनाः ॥ ७१ ॥

परुषार्करुचा विकृष्यमाणे[1]
वसुधायाः सति जीवने निविष्टाम् ।
अपि तत्परुरंगरेणवस्तां
सहिताः क्षुद्रतया हि नोचितज्ञाः ॥ ७२ ॥

तृषिता इव पूषरश्मितापात्
पृथुगंत्रीपथपांशवो जनस्य ।
अविशंश्चरणाभिघातवृद्धा
इव चोत्प्लुत्य शिरस्थतोयकुंभान् ॥ ७३ ॥

---

१ दूषैः ।

दिवसेषु विजृंभिते विपक्षे
वलवत्यूष्मणि भानुमत्प्रतापे ।
निममज्ज भियेव शैत्यधर्मः
प्रतिरुद्धार्करुचे प्रभाजलेषु ॥ ७४ ॥

अवलंबितदामशुक्तिजाला—
ममृताभ्रावित रश्मिभिः प्रपूर्णे ।
पृथुभंगसमानशुभ्रशय्या—
मधितिष्ठन्मणिहर्म्यगर्भगेहे ॥ ७५ ॥

विविधीकृतियंत्रकांतयंत्र—
च्युतधाराशिशिरांभसां निपाते ।
मसृणस्फटिकस्थलीषु पश्यन्
परिधूर्चि नवमौक्तिकप्रकाशम् ॥ ७६ ॥

हरिचंदनदिग्धदिव्यमूर्ति—
र्विपुलोरस्थगितोरुहारयष्टिः ।
विमृशन् करपल्लवेन कांता—
कुचकुंभौ तदुदग्रमर्दितौ ॥ ७७ ॥

मधुरध्वनिर्निर्गमं विपंची—
गुणझंकृतिमश्रवं नृपस्य पुरः ।
श्रवसोरवतंसमग्रयच्छ—
न्न निदाघस्य निजांतिकप्रवेशम् ॥ ७८ ॥

निजसंगनिपिक्तसौख्यबुद्धि—
र्विदग्धांगनाकदम्बधूल्लिकाः ।
नृपगन्नुमिवैव गोपितानां
व्यमुचद् धर्मजनंगमः प्रवृत्तम् ॥ ७९ ॥

१ °मातपः ।

विरहज्वरदाहधूम्रसंगी
पथिकश्वासपरंपरेव दृश्या ।
दिशि दिश्युदपादि मेघरेखा
स्वयमासेदुषि घर्मकालभंगे ॥ ८० ॥

सरसाकृतयः ककुप्सु मेघा
बभुरब्धेर्भुवनस्य घर्मतापम् ।
वमथूद्वमनैरिवापनेतुं
पृथुहस्ता इव दिग्गजैरुदस्ताः ॥ ८१

प्रथमोदितवारिवाहमुक्ता-
श्चिरमस्पृश्य निदाघदूषितस्य ।
जगतः प्रविशोधनप्रवृत्ता
इव शुंभज्जलबिन्दवः प्रपेतुः ॥ ८२ ॥

अकृतोच्छलदच्छपांसुपाता
पृथुपाथःकणसंहतिः पृथिव्याम् ।
क्षितिभागगताथ दीप्तघर्म-
स्फुरदुच्छ्वासनिभानि सूत्कृतानि ॥ ८३ ॥

ककुभो मलिनांबरं दधानाः
कृतघोषाः कलुषं जलाशयं च ।
न घनाभिनिवेशतो न बभ्रुः
कृशिमानं गतभर्तृकाश्च योषाः ॥ ८४ ॥

प्रथितैः पृथुभिस्तमालनीलैः
पवना धोरणनोदितोपनीतैः ।
मदवद्भिररेरिवातिभीम-
ध्वनिगर्भैर्भिदुरैर्मिथः प्रजघ्ने ॥ ८५ ॥

पथिका मरणे मतिं वबंधुः
स्फुरदुद्दामतडिल्लतैकदंष्ट्रम् ॥ ८६ ॥

परितापहरं पयःप्रफेनं
प्रकृतध्यानमनेकभूरिधारम् ।
स दुदोह महीविवृद्धये गाः
समयः पीनपयोधराश्रितश्रः ॥ ८७ ॥

विरहासहनाद्विवाहुवाहे
मुहुरावर्पति पर्वतावतीर्णाः ।
पतिमभ्ययुरापगाः प्रवेगा--
लहरीहस्तगृहीतपूगपात्राः ॥ ८८ ॥

स्मरतोमरतीव्रभेदखिन्द--
ध्वनिता चित्तशिलानलोपजाताः ।
स्फुरदग्निशिखा इवोल्लसन्त्यो
घनकूटानि तडिल्लताः प्रसस्रुः ॥ ८९ ॥

वनिताहृदये तमोमयीके
रजनीमत्रिकया मनोमयाग्नेः ।
ज्वलितस्य घनैरिवाचिरांशु--
च्छलतीव्रारुचयः समुद्बभूवुः ॥ ९० ॥

विरमस्व दुरन्तकामिनीकश्चेतः-
क्षयगृहा घनकालवासतोयाः ।
गृहदैवदमुच्यमानपाथः
पृथुधाराः परिकीलिता इवोर्व्याम् ॥ ९१ ॥

अचिरश्रुतिरक्तकर्णमर्दं-
रिव कालेन विभिद्य खाद्यमानैः ।
कुसुमे व्यथया विवर्तमाने-
र्मुमुचे भृङ्गिजनं भृशाकुलाङ्गैः ॥ ९२ ॥

कमलाकरमूर्जितप्रसादं
　　रसिकं संप्रविमुच्य मुग्धमत्स्यैः ।
अचिरादभिपातुकैर्वभूवे
　　मृतमुच्चैर्विषमं विषप्रवाहम् ॥ ९३ ॥

जलदैरभितः सदानभोग-
　　रतिकर्मण्यगुणैर्निषिक्तगर्भा ।
अलिकीटगृहीतपुष्पगंधा
　　धत्ते तथापि न केतकी फलानि ॥ ९४ ।

विततैरिव विस्फुलिंगवर्गै—
　　रुणाशावदनैरिरंमदस्य ।
वनभूरवकीर्णशक्रगोपैः
　　प्रवितस्तार भयान्यवल्लभानाम् ॥ ९५ ॥

अभिमानमुदस्य मस्तके का—
　　मनिदेशं न दधौ सवस्तुके का ।
वनितां मुमुचुर्निशम्य के का—
　　मपि मेघागमजां मयूरकेकाम् ॥ ९६ ॥

भुजगीरसिताः पयोदलेखा
　　इव मुग्धाः प्रमदेन भक्षयित्वा ।
विषवेदनयेव तीव्रयोगा—
　　दनुसंधाय कलापिनः प्रणेदुः ॥ ९७ ॥

जलदध्वनिनर्तितेन सद्यः
　　स्फुरदुत्तानितबर्हमंडलेन ।
शिखिनां निवहेन सर्वदिक्का—
　　चलचित्रेव बभावरण्यभूमिः ॥ ९८ ॥

सतमालरुचेर्मनोज्ञभावं
नवदूर्वांकुरसंततिर्बिभेजे।
गलितामिलदंबुवाहभारा—
न्नभसः श्यामलतेव भूतलस्य ॥ ९९ ॥

प्रणिधाय शिखंडिनं पुरस्तात्
धृतधन्वा घनफल्गुनः सगर्जम्।
निजघान शरैर्निकामतीव्रै-
र्धरभीष्मं तरुणीजनाभिमानम् ॥ १०० ॥

स्खलितः कृतनृत्तनीलकंठः
स्फुरदुत्तंभितबर्हमंडलेषु।
अवधूनितमल्लिकामनोज्ञ--
प्रसवेऽनुद्रुतशब्दितद्विरेफे ॥ १०१ ॥

जलदः क्षरदांबवस्त्ववीयः
कणशैथिल्यविधानदृष्टदोषः।
अभिशाप इव क्रुधा क्षणद्धि--
स्तृषितैरंबरचारिचातकौघैः ॥ १०२ ॥

स्मरमंदिरतोरणं जिहासो—
र्दयितानां परिवृत्तमूरुयुग्मम्।
शिरसीव निधातुमुद्दधानो
घनपाषाणमशेषदिग्मुखेषु ॥ १०३ ॥

विहरन्नखिलासु दिक्षु वायु—
र्वनितामानससीरमंविरूढान्।
अभिमानतृणांकुरानधाक्षी—
ल्लघुसंधुक्षितमन्मथानलेन ॥ १०४ ॥

---

१ स्मृमिरुद्गोः।

जलदागमनोचितस्तु सोऽथ—
युवराजं प्रमदासदोनिषण्णम् ।
रचितांजलिरित्युवाच कश्चिद्
वचनं हेतिगृहे कृताधिकारः ॥ १०५ ॥

स्फुरदर्चिरुदग्रदीर्घलेखा—
प्रकराक्रांतनभस्तवाद्य चक्रम् ।
प्रविशन्नरदेव ! शस्त्रशाला—
महमद्राक्षमपातिदुर्निरीक्ष्यम् ॥ १०६ ॥

अमरैः परिवीक्ष्यते तदुच्चै—
र्मणिमालिस्फुरदंशुचित्रलेखैः ।
प्रवहद्भिरिव प्रमोदहेतून्
सुरचापान्यपहृत्य वारिदेभ्यः ॥ १०७

जननाथ ! रथांगतो विभीता
इव चापं प्रविमुच्य मुक्तशब्दाः ।
मिलिता धनदस्यवो धनांते
पथिकप्राणहरास्तिरोभवंति ॥ १०८ ॥

चकितेव विधेयवर्णसीम—
स्तव हेतित्वमुपागते रथांगे
प्रविमुक्तनिशाविहारवृत्ति—
र्वसुधा पंकिलतामपोहतीयम् ॥ १०९ ॥

परिटेतिमयूखसीरकृष्टं
गगनक्षेत्रमिदं प्रसक्तितोयम् ।
तव देव ! यशस्यबीजवापा—
निव सर्वत्र विभर्त्ति राजहंसान् ॥ ११०

१ शस्त्रागारे । २ इंद्रधनूंषि । ३ चक्रे । ४ बीजक्षेत्राणि ।

देव ! त्रयोदश परेऽपि परोपताप—
काले प्रभावमहिमोदयहेतवस्ते।
अन्वागताः सपदि चक्रधरस्य चक्रं
कुर्वंति रत्ननिधयो विविधांगलक्ष्मीम् ॥ १११॥

ाले दिग्विजयोद्यमस्य शारदं दिश्याखिलक्ष्माभृतां
चेतोजर्जरणप्रभावमहितं चक्रादिरत्नागमम्।
तस्यैवं ब्रुवतः प्रमोदविकसच्छ्रोत्रस्थलीर्नृप—
श्चक्रे नैकमहत्प्रवस्तुनिचहैस्तृष्णाकुटीपूरणम् ॥ ११२॥

इति श्रीवादिराजसूरिविरचिते श्रीपार्श्वजिनेश्वरचरिते
महाकाव्ये वज्रनाभचक्रवर्तिचक्रप्रादुर्भावो नाम
पंचमः सर्गः।

# षष्ठः सर्गः ।



विधिप्रसिद्धां प्रविधाय पूजां,
चक्रस्य चक्री स वली बलेन ।
क्रमेण दिक्चक्रजयाय जिष्णु—
र्जगाम कामार्चितजीवलोकः ॥ १ ॥

अरातिभूपालसमूहभीति—
स्फुरन्मनःशैलरवस्य शंकाम् ।
व्यधत्त पुंसां नरलोकभर्तुः
प्रस्थानशंसी पटहप्रणादः ॥ २ ॥

जिनेश्वराभ्यर्चनपुण्यतंदुलैः
समं स दिष्टं जिनशासनद्विजैः ।
सहर्षमाशीर्वचनं समग्रहीत्
भवंति भव्या हितवस्तुवेदिनः ॥ ३ ॥

लावण्यपल्लवभृतो मुखदर्पणांका—
न्मांगल्यपूर्णकलशानिव वारयोषाः ।
आवेष्टयंश्च वसुधेशमनाशकीर्त्ति
कार्त्तस्वरच्छविकचारकुचान् दधानाः ॥ ४

कमलोढहि दूरमुज्जिगांसौ
रथमासेदुषि तत्र पार्थिवार्के ।
अभवत् सुमहोदयः पुरस्ता—
दनुरागोल्वणसुप्रसन्नदिकः ॥ ५ ॥

अनेकदिग्भेदविदर्कविब—
मार्गोपदेशप्रतिपन्नकृत्यम् ।

---

१ उच्चारितम् । २ कमला लक्ष्मी कमल पुष्प च ।

प्रभाचिनस्तस्य भयादिवाग्रे
चक्रं प्रभामालि चचाल भीमम् ॥ ६ ॥

चक्रप्रभावेन नृपस्य तेजो
निवेद्यमानं निखिलासु दिक्षु ।
उल्काच्छलेनाहितभूपतीना—
मुत्रासयामास विलोचनानि ॥ ७ ॥

छत्रच्छलेन शुचिशारदमभ्रमुच्चै—
रन्यप्रभामुपरि चक्रधरादसोढुम् ।
एकांबरानुगमबंधुतयेव भानुं
छायासुधामधुरमावृतमभ्यरक्षत् ॥ ८ ॥

ऋजुवक्रतया पिशंगकृष्णौ
प्रकृतिस्थूलकृशौ च दंडखड्गौ ।
क्षितिपस्य निदेशकाम्ययेवा—
चलतामग्रपदे मिथोऽपि रुद्धौ ॥ ९ ॥

तस्य पार्थिवपतेरभिपार्श्वं
चामरे प्रचलिते हिमशुभ्रे ।
कायकांतिविभवामृतसिंधो—
र्वीचिविभ्रममुच्चं व्यदधाताम् ॥ १० ॥

निष्ठमहाटककांचिः कटकावभासी
सोच्छ्रायमूर्तिरनिलंघितसर्वतेजाः ।
रेजे स रत्नमुकुटेन यथा सुमेरु—
स्तारागणेन शिरसि प्रतियुंजितेन ॥ ११ ॥

सकलवसुधानाथे तस्मिन् जयाय दिशां तदा
चलति तदरिव्रांतायामप्रधानकृतागसः ।

---

१ शत्रुगृहनिवासदानादपराधः ।

प्रियानवेक्ष्य पुरस्थिता नृणां
प्रदर्श्य पादान् मणिनूपुरावहान् ।
अयांबभूवुः सुभगाः पुरंध्रयः
सलीलमुद्दामकरेणुवाहिताः ॥ २५ ॥

भग्नैरनोभिरतिभारवशान्मदांधै—
रुद्धे नु वर्त्मनि गजैरपि कृच्छ्रनेयैः ।
दुःखेन तस्थुरितरे भरभुग्नकंठा
पाश्चात्यहस्तिकरसीकरसिक्तपृष्ठाः ॥ २६

कुसुमसुरभिगंधि तोयमन्नं
शकटभृतं सततं बुभुक्षितेभ्यः ।
अभिरचितमनुक्रमादयच्छ—
न्नपि घनवर्त्मसु चक्रिणो नियुक्ताः ॥ २७

परिप्लुतहयावलिस्फुरितहेमपर्याणकच्छवि—
प्रसर्पिगलाश्च ककुभोऽपि यत्राजिरे ।
भयादिव जिगीषतस्सकलचक्रिणस्सश्रियं
विबभ्रुरभितृप्तये कनकवृष्टिमिष्टामिव ॥

आनीलविग्रहमहोन्नतिचुंबिताभ्राः
सिंदूरपद्धतिभृतो भृतधातुरागाः ।
नागा नगाश्च गमनागमनप्रकृत्या
भेदेन संबुबुधिरे पथि मानवौघैः ॥ २९ ॥

वनगजमदावेशोदीर्णक्रुधस्तदकुर्वत
क्षितिपतिगजा धावंतस्ता दिशो दलितां
कृतकलकलं भद्रयद्वारं भयादनडुत्कुलं
पथि यदनुनिभ्राम्यद् गोपव्रजं प्रपलायते

१ भातिश्रय ।

मायूरपिच्छरचितोल्लसदातपत्र-
च्छायावृतैरनुगमागधदत्तगीतैः।
अंदोलकैः सुरभिचंदनदिग्धगात्राः
केचित् सुखालसदृशः प्रययुर्महीशाः ॥ ३१॥

वस्तुसारनिवहं प्रतिपाद्य
प्रीणितेन विजयातनयेन।
नरप्रयोजनकृतस्सह तस्य—
र्मंडलाधिपतयः प्रविचेलुः ॥ ३२ ॥

पामरैः स ददृशे भयादुप—
ग्रामवर्तिभिरुपेत्य चक्रभृत्।
क्षेमदः सुरभिशालितंडुल—
स्तोमहेमनिधहाद्युपायनैः ॥ ३३ ॥

केचिदेवमवदन्सुहृदो वा—
ऽऽतपे व्रजत घर्म दवीयः।
दीर्घिकातटभुवः सहकारा
विश्रमाय पुरतोऽपि भवंति ॥ ३४ ॥

तीरे भूरिद्रुमवति वधूबंधुभिर्भोजनांते
विश्रांतानां क्षणमनुचराः पद्मिनीपत्रगूढम्।
अंभः शुभ्रं सविसवलयं पद्मजालं सनालं
तास्यत्यांशौ पथि धनवतामाहरन् दीर्घिकाभ्यः ॥ ३५ ॥

बृहद्धंटारावाः पृथुलधवलांगा वलयभृ—
द्विषाणाः सिंदूरच्छविविरचितचूडाढ्यवलाः।
वराढ्यालंकारा यवसभरमूढा क्षितिपते
न रुद्धा हो धत्त्वावस्त्यपि तत्क्षणे सेनार्णवे ॥ ३६॥ (?)

( संति चलाति चक्रधरप्रभावः । )

पुरस्तात् प्रस्थाने पटुसुभटसेनायुधमया—
वखंडयारंहो रणशिरसि दंडो विजयिनः ।
व्युदस्य स्वस्थानादनवनतमूर्द्धसु महतो
द्विभेदान्यक्ष्येषां स्फुटमवनतेषु क्षितिभृतः ॥ ३७ ॥

चक्री स एवं बहुभिः प्रयाणै—
रत्नांमगादुद्धतभंगकारी ।
हंसावलीनिस्वनमुग्धवाचा
तस्यैव सा स्वागतमभ्यधत्त ॥ ३८ ॥

भंगोच्छलच्छिशिरशीकरजालमब्ज—,
किंजल्कपिंजरितमर्यघियेव बिभ्रत् ।
अभ्यागतं क्षितिपमभ्युदयाय चक्षुः
सिंधोः स्फुटध्वनिमधुनर्तडिंडिमौघैः ॥ ३९ ॥

प्रोल्लसत्कमलमुन्मदेभमु—
ल्लोलहंसधवलध्वजं जलम् ।
चक्रिणश्च बलमुद्वहद् ययौ
विभ्रमादुभयतो नदीतटम् ॥ ४० ॥

स्फुरन्मणिशिलातले सुरभिवल्लरीमंडप—
च्युतप्रसवयासितं मरुति वाति नद्यास्तटे ।
प्रियाधरमधु श्रमाद्विव निपीय मार्गांगना
निशाधमुरिलेभ्यगाः सुरतनिर्मीलिताक्षाः क्षणम् ॥ ४१ ॥

यावदिष्टमिनरेनरपुष्टि—
स्पर्द्धयेव मधुरः फलवर्गः ।
चक्रवर्तिकटकाय निमेजे
तत्पटीमणितटद्रुमखंडैः ॥ ४२ ॥

---

१ शोभादधिकं प्रथयते २ नवीम ।

क्षितिपतिमवलोक्यैवागतं दिग्जयाय
स्वयमधिकमयोक्ता वर्त्मयुक्ता च रक्ता ।
स्फुटमित इत पहीत्यावदंती शकुंत—
ध्वनिभिरिव पुरस्तात् गच्छ गच्छेत्यगच्छत् ॥ ४३ ॥

आसीद्दत्तसकलजनोत्सवेन गच्छन्
भूनाथस्तुनदि रम्यवर्त्मनैधम् ।
उद्योगस्थगितमनाः स चक्रवर्ती
शीतोदानिकटमगादगाधशौर्यः ॥ ४४ ॥

तस्मिँल्लघुस्थपतिनिर्मितमूर्मशुभ्र—
प्रासादमालि नगरं नरलोकपालैः ।
गच्छद्भिरेव कृतविस्मयमालुलोके
साट्टालशालमणिगोपुरमुत्पताकम् ॥ ४५ ॥

विभज्य सेनापतिपारिपार्श्विकाः
परिभ्रमंतो भूनरंशायएयः ।
परीत्य चक्रेश्वरवासमंदिरं
निवासयामासुरिलातलेश्वरान् ॥ ४६ ॥

अग्रप्रधावितकलाकरमौविदल्ल—
कन्मारिलेषु नृषु निलिपविशेषभाजः ।
विद्युल्लता इव घनादवतीर्य यानाद्
देव्यो यथास्वमविशन्नृपमंदिराणि ॥ ४७ ॥

कश्चित्तुरंगमनना: स्वयमप्रभूत्वा—
सभ्यर्थितस्तु दयितैरवरोप्यमाणाः ।
भीत्येव चारुकुचपीडितवक्षसस्तान्—
कंठेषु गाढमधिबाहुलता बबंधुः ॥ ४८ ॥

---

१ महिला ।

आश्लिष्य कंठमवरोपयतुस्तुरंगात्
कांतस्य तच्छ्रुवसि काचिदवोचदेवम् ।
स्पृष्टा तु मच्चरणयोः कठिना धरित्री
पीडां तनोति नय तत्स्वयमेव शय्याम् ॥ ४९ ॥

गलद्गात्रस्वेदा व्यजनकमरुत्संगसुहिता
दवीयोऽध्वश्रांताः क्षणमनवरूढा हयकुलात् ।
विपश्यंतस्तस्थुर्निजभवनरम्याजिरगतां
यथास्थानं सेनामभिनिविशमानां क्षितिभृतः ॥ ५० ॥

अध्वक्लमापगमरम्यविधानवेषा
वात्सल्यतामिव गता नगरस्य वेश्याः ।
आकस्मिकस्मितकथानुनयैर्भुजंगान्
प्रत्यग्रहीषुरविकल्पितमध्वखिन्नान् ॥ ५१ ॥

त्यक्तायोगागलितवहलस्वेदचिक्कणपृष्ठाः
स्थूरपृष्ठाः क्षितिविलुठनालब्धकंडूतिभंगाः ।
एकैकस्थैरधिकृतजनैः पातुमंभस्तुषार्ता
जग्मू रक्ताः करगतदृढप्रग्रहैः कृष्यमाणाः ॥ ५२ ॥

अथैषिणश्चक्रभृतो भयात् भुवं
करैरनाक्रम्य दिशस्तदा रथी ।
प्रतापहीनो वनवर्त्म मंडला—
दधावदस्ताचलमस्तकं रविः ॥ ५३ ॥

स्कंधावारं प्रविशति तदा भर्तरि क्ष्मापतीनां
नांदीनादः पणवतुणवाद्युद्धनिष्वानमिश्रः ।
तेजोभंगं दिनकृत इवोद्धकुमाशासु गच्छं—
स्तत्रस्थानामकृत करिणां कर्णरंध्रेषु पीडाम् ॥ ५४ ॥

---

१ दिक्षु ।

मणिमयतटभित्तौ तीव्रवेगाभिघातात्
ध्वनति बधिरताशं निम्नगायास्तरंगे ।
विवृतगलगृहरकं बृंहितं श्यामशैलाः
प्रतिरवमिव चक्रुश्चकितसेनागजेंद्राः ॥ ५५ ॥

आसन्नमस्तमयमात्मन एव दृष्ट्वा
वक्षस्थलादिव भयस्फुटिताद् गलद्भिः ।
रक्तैर्विलिप्त इव पाटलितो बभूव
वृद्धो रविः करधृतद्रुमदीर्घशाखः ॥ ५६ ॥

जनपतिरथचक्रनेमिवाजि—
व्रजखुरघातसमुत्थितं प्रलेपम्[1] ।
* ध्रुवमवहदरज्यत प्रतीची
यदविरलैरपराद्रिधातुचूर्णैः ॥ ५७ ॥

गिरिपृथुलकुचोपगूढभास्वद्—
विटपुरुद्धविलासिनीव संध्या ।
कवलितपृथुवारुणीप्रभावा—
दिव परिपाटलदर्शना बभूव ॥ ५८ ॥

कृतसमयमसंगं प्रेयसीखर्वसोढुं
तदनुगहृदयत्वादक्षमाश्चक्रवाकाः ।
विविशुरिन विषादादुज्ज्वलंतं कृशानुं
प्रसृतकपिलसंध्यारागसंपर्कपिंगाः ॥ ५९ ॥

आरब्धहंसमधुरध्वनिजाप्यमंत्र—
स्तत्कालकुड्मलितपाटलपद्मपाणिः ।
अंभःशुचिर्बिसलतारचितोपवीतः
संध्यामिव स्वयमवंदत पद्मखंडः ॥ ६० ॥

---

१ मदम् ।

विमुख इति विवेकी नेति दुर्वारदर्पा—
वह इति वरहारीत्युद्धतश्चेति नित्यम् ।
कमलमुखितयाराद्दक्षसश्चेद्वराकः
स कथय कुचयोस्ते किं न ते संति धर्माः ॥ ७२ ॥

पीडासहं मधुरमव्यतिरिक्तरागं—
मायद्वलुंबनरुचिं रतिनाट्यरंगम् ।
तं चेन्न वांच्छसि मुखान्वितवस्तु नाम
विस्तारमृच्छति गुणस्स तवाधरेऽपि ॥ ७३ ॥

निर्मलश्रवणसंगमनंगो
वृंहणच्छविमतुच्छविलासम् ।
कांतमाक्षिपसि यद्युत्पन्नं
किं न ते तरुणि तादृगपांग ॥ ७४ ॥

स्वभावमलिनस्थितो शुचिरहेतुवक्राकृतो
भ्रज स्वरसगंधतृप्तमधुपे सतामाश्रयः ।
निसृष्टरतिनिग्रहे सरति नायकः स्निग्धया
घटेत यदुपेक्षते सुदति केशवेषे त्वया ॥ ७५ ॥

किमिति तरुणि तस्मिन्नंजनन्यासमन्यं
रचयसि तव सिद्धयेदन्यथा कामसिद्धिः ।
स हि तव मृगनेत्रे नेत्रगर्भस्थितः स—
न्नपि भवति निमित्तं त्वन्मुखश्यामतायाम् ॥ ७६ ॥

शुचित्वमपि तस्य विद्धि वचनान्मम प्रत्युत
स्त्वमेव सुभगे शुचिः कुचभरावमर्शोचितम् ।

---

१ दुर्वारदर्पावह दुर्वारं निवारयितुमशक्य यद्दर्पं गर्वस्त वहतीं
२ अव्यतिरिक्त अपृथग् रागोऽनुरागो यस्य तम् ।

यदुद्वहसि वक्षसा रुचिरहारमच्छस्फुरन्-
मयूखमुखचुंबिताधरमसौ कांतसंबंधिनी ॥ ७७ ॥

इति सखि कथयेव तमोमुचा
युवतिरात्मवती दयितागमे ।
अकृत बुद्धिमधिज्यशरासने
निशि समीपगते कुसुमायुधे ॥ ७८ ॥

शयिता सखीरपि विसृज्य वधू-
रतिकौतुकेन शयनेऽधिनिशम् ।
दयितस्य च द्रुतमनागमना-
दमिमीलदंगकुपितेव दृशौ ॥ ७९ ॥

तीव्राभिषंगमतिपाल्य रतस्य कालं
बाला प्रियस्य निशि काचिदुपस्थितस्य ।
क्रोधोदयादनुनयादवधीरयंती
पादप्रहारमकृतोरसि याधकांतम् ॥ ८० ॥

आगता प्रतिनिवृत्य वेश्मनो
वल्लभस्य निशि साभ्यसूयया ।
कांतयेति नवभोगलांछना
संफलीवचनमभ्यदीयत ॥ ८१ ॥

सख्यं दूति यदावयोरविविधत्तत्रापि मत्प्रेयसी
तत्सज्यं प्रतिपक्षमद्य यदयं मद्देहदेश्यं व्यधात् ।
प्रस्वेदार्द्रमुखं नखक्षतकुचं निर्दिष्टदंतच्छदं
तांबूलांकविलोचनं तव रतिव्यत्यस्तवस्त्रं वपुः ॥ ८२ ॥

---

१ अच्छं निर्मलमत एव स्फुरंत. दैदीप्यमाना' ये मयूखा. किरणानि तान्येव मुखानि तैश्चुंबितमधरं दलच्छदं येन तम् । २ तमोमुचा चंद्रेण । ३ अधिज्यमारोपितं शरासनं धनुर्यस्य तस्मिन् । ४ अतिचापल्येन । ५ नवं च तत् भोगं तस्य लांछनं चिन्हं यस्या सा ।

घनतमसि निवासे सन्निधाने सखी मां
युवतिरधरबिंबे चुंब्यमाना प्रियेण ।
उपनतरतिलोपं दीपमुद्दीपयंतं
परिजनमुदितेर्ष्या[1]रूक्षमीक्षांचभूव ॥ ८३ ॥

वनिताश्लथनीविखंडवासा
शिशिरभ-स्नपिता भियेव शीताद् ।
वृणु मां वृणु मामिति प्रयंती
शयनस्थं परिपस्वजे स्वमीशम् ॥ ८४ ॥

योजयन् जघनमंडले दृशो
वल्लभः प्रमदया विवस्त्रया ।
संभ्रमत्कुचभरावनुद्धव -
श्च स्खला युवतिरपीड्यताधरे ॥ ८५ ॥

अनुनयकलितवल्लभे कृताग—
स्युचितमिवावयती जगाम लज्जाम् ।
अनुनिशमभिमानबंधभंगा-
दिव युवतेश्शिथिलीबभूव नीवी ॥ ८६ ॥

रागी वियोगमसहन्निव रात्रिमिंदु-
र्मुक्त्वा मुहूर्तमवनीप्रथितप्रदोषम् ।
तस्याः प्रसादनमिवैण[2]कमुद्वहन्ता—
मन्वेष्ट काम इव गोत्रमथारोहत् ॥ ८७ ॥

हिमांशुरुद्यत्फणचक्रवालं
शेषोरगस्यो[3]फणरत्नदीप्तिः ।
भुवो भृता यं स्वयमन्विषाय
प्रभामिवोद्वीक्षितुमुत्थितस्य ॥ ८८ ॥

---

१ उपशाम्यया । २ मृगजाति । ३ शेषनागशिर स्थितरत्नस्य दीप्तिरिव
कांतिरस्येति उपमितवृत्ति ।

पिशंगमंगैः शुशुभे हिमांशो-
विंबं गिरेः शृंगविलंबि रात्रौ ।
तत्कालसाम्राज्यकृते स्मरस्य
प्रापोदयस्येव सुवर्णपीठम् ॥ ८९ ॥

मदावहारक्तचकोरनेत्रा-
मुद्भासयन् ध्वांतविसारिवासः ।
निशामिवालिंगितुमंगरागी
प्रसारयामास करान्मृगांकः ॥ ९० ॥

मुदं मृदिम्ना जनयञ्जनानां
करैश्चिरं मंडलरागरूढः ।
राजा मघोनोऽपि विलिख्य काष्ठा-
मध्यास सौधोदयमद्वितीयम् ॥ ९१ ॥

दृढतिमिरसमग्रव्योमगर्भावकीर्णा
विरलविधिकर्मिंदोरश्मयः कुंदशुभ्राः ।
सरसि रसवियोगात्पंकमात्रावशेषे
विततमृदुमृणालीविभ्रमं बिभ्रते स्म ॥ ९२ ॥

आपीप्यदमृतद्युतिर्विदलिताननामुच्छ्वस-
त्तरंगशयनां शनैः कुमुदिनीं विभक्तांबरः ।
करग्रहसमर्पितं नवसुधारसं सुंदरी-
र्युवापि मधु मानवो रुचिरहंसतूलाश्रयः ॥ ९३ ॥

अभिनवरुचिमात्मनि प्रसक्तां
स्मरकृतमिंद्रदिशः स्वयं दधत्याः ।
वरचंपक इवोत्पलीचिबुके-
र्हिमरुचिरंकभृदाबभावदभ्रः ॥ ९४ ॥

---

१ मृग अंके क्रोडे यस्यासौ इंदुरित्यर्थः । २ रसवियोगात् जलराहित्यात् ।
३ श्रेष्ठमयमित्यर्थं. ।

शुक्लान्वयादुज्झितरागबंधो—
ज्योतिर्विमानेन जगद्विभंजन् ।
अनेकधा लक्ष्मविवादभूमि—
र्जगाम निर्मुक्त इवेंदुरूर्ध्वम् ॥ ९५ ॥

कांतस्य शांततमसो हरिणांकमूर्तेः
प्रत्यागमे सति मुदेव कुमुद्वतीनाम् ।
हासश्रियेव रुचिपल्लवितोल्लसंत्या
सांद्रक्रमं नभसि चंद्रिकया प्रतस्थे ॥ ९६ ॥

हिमद्युतेर्बालतमा मयूखाः
कोलाहलं हंसरवैर्दधानाः ।
संक्रीडनायेव समं निपेतु
स्तारासरित्संगतसैकतेषु ॥ ९७ ॥

राजासि चंद्र विवशास्मि रवेर्वियोगा—
त्तन्मां कुतः स्पृशसि निश्चियमंग रात्रौ ।
इत्याबभाण बिसिनी ध्रुवमात्तशोका
कोकस्वरैर्मुकुलितारुणपद्मपाणिः ॥ ९८ ॥

ज्योतिर्द्रुमांश्चंद्रमसः प्रभायां
न हि व्यशिष्यंत वनद्रुमेभ्यः ।
राजप्रभावो ननु तादृगेव
तत्संनिधौ यत्समता परेषाम् ॥ ९९ ॥

विवृतवदनमुद्रा नीलनीरेजराजि—
स्तरलमतरदंतैर्निस्वनन्ती द्विरेफैः ।
तिमिरविततिरश्वैरिंदुना रश्मिबद्धा
सरिति सुभृतवारि व्योमतः पातितेव ॥ १०० ॥

---

१ व्यशिष्यंत विशेषं प्रापु । २ राजसमीपे । ३ नीलकमलपंक्ति ।

सौधावली दूरपथप्रयाणा-
दिव श्रमार्ता निशि चंद्रपादाः ।
संभूय मंदागतमारुतायां
विशश्रमुः स्पृष्टवधूनितंबाः ॥ १०१ ॥

सरस्तरंगामलतल्परूढा-
श्चंद्रातपे चुंबति पंकजिन्यः ।
आनंदयोगादिव सानुरागा-
न्यमीलयन्नंबुजलोचनानि ॥ १०२ ॥

शुचिस्मितैर्वामविलोचनानां
प्रहासगोष्ठ्यामभिनंदमानः ।
बभूव रागादिव पीयरात्मा
मृगांकरश्मिप्रसरो निवेशे ॥ १०३ ॥

लीलाविलोलनयनोत्पलभृंति सौध-
शृंगे शशांकरुचिमंति मदोपकंति ।
कामातुरा युवलयः स्वधयन्मधूनि
तासां मुखानि समखानि पुनर्युवानः ॥ १०४ ॥

अवेक्ष्य मूर्तिं मधुनि स्वकामिति
व्यतर्कयत्काचन कर्कशस्तनी ।
अहं निपीतास्मि किमंग हालया
मयेव रागात्प्रतिपासितव्यया ॥ १०५ ॥

अतिपानविधेरगृध्नुरेका-
प्रियमुद्दामसुगंधिकापि शेये ।
अधरप्रतिबिंबदर्शनेन
स्पृहयालुं विदधे पुनर्विदग्धा ॥ १०६ ॥

---

१ प्रासादपंक्त्याम् । २ अपिबन् । ३ सुरया ।

हरिणदृशां मुखैः सह निशोदितशीतरुचिर-
फलदंफलगुवांधवमगीभिरमा ।
यदयं मणिमयभाजनस्थमदिराभृतवारि
मिलञ्लुठदनल्परागसुहृदिप्रतिबिंबगतः ॥ १०७ ॥

ध्रुवं वधूवल्लभकंठगह्वरा-
द्गृहीतहालामदशक्तिरुद्गता ।
विमोहनं देहभृतां व्यधत्तत -
त्सरस्वती गीतमयीश्रुतिं गता ॥ १०८ ॥

दृढतरपरिरंभणच्छलेन यूनां
कुचभरमुद्धरतामिव प्रसन्नाः ।
अधरमधु नतभ्रुवो वितेनु-
स्तनुतनवस्तनुमध्यखेदहेतुम् ॥ १०९ ॥

वधूवराग्मधुमदनि_लप्रियः
स्मरो मुदा भरतकलक्रियागुरुः ।
अयोजयन्निधुवननृत्यकर्मणा
समुल्लसद्वरलतालयोजनः ॥ ११० ॥

अन्विच्छिदन्वामदृश‌ः प्रयत्ताः
प्रस्वेदतोयैः पुरुषायितेषु ।
वक्षांसि वल्गत्कुचकुंभमुक्त-
मूर्तैरिव प्रेमरसैः प्रियाणाम् ॥ १११ ॥

रतिक्रियागममिकप्रवृत्त-
स्त्रीपुंसलीलालयकंठशब्दाः ।
अन्वक्रियंतेव समं क्वणद्भि-
रत्नासरिद्वारिणि चक्रवाकैः ॥ ११२ ॥

अन्मथ शिरसि स्थितो मृगांको
मदनकरे इलरूप्यकुंभतुल्यः ।

रतिरसभरभिन्नमानवाना—
मुपरि सुधामिव चंद्रिकां मुमोच ॥ ११३ ॥

दीर्घप्रसारितकरेण गुहागृहेषु
संक्रीडनार्थमिव चंद्रमसा विकृष्टा ।
जारेण रात्रिरपराद्रिमियाय गुप्तं
सुप्ते जने धुग्रहे पश्चिमदेशभक्त्या ॥ ११४ ॥

उन्मुच्य सन्मार्गमुदग्रमुक्ष—
राजानमाराधितवारुणीकम् ।
अत्यक्तवर्त्मा श्रवणानुवर्ती
नक्षत्रलोकस्तमनु प्रतस्थे ॥ ११५ ॥

सदृशं हि भृशोल्लसन्मनोभू—
रभिगच्छदपरां तुषारधामा
वहते स सुधागृहाग्रसुप्त—
प्रमदानां जघनानि यत्करौघैः ॥ ११६ ॥

गाढरतिर्यत्नतया सुरतिक्रमेण हृतिभिर्वनिता ।
परिरभ्य दृष्टमधुरोष्टमणीर्निभृतं निद्रापरिणताः सुषुपे ॥ ११७ ॥

गृहेषु रात्रावपरक्षणार्थं
निद्रानुरोधेऽपि चिराभियोगात् ।
पुरस्सरत्कध्वनिजल्परवाणा
समुद्बभुवुर्युगपत्प्रबोधाः ॥ ११८ ॥

अश्रांतयांतमदसौरभलोभसंगि—
भृंगस्वनैरिव सुखप्रतिबोधभाजः ।

---

१ चंद्र, नृप च । २ वारुणी सुरा, उत्तरदिक् च । ३ न त्यक्तो मार्गो येन, सन्मार्गानुयायीत्यर्थः । पक्षे—न त्यक्तो मार्गो येन समार्गानुयायीत्यर्थः । ४ पक्षे—क्षत्रियसमूहेनेति श्लेषः । ५ निरन्तरप्रवाहितस्येत्यर्थः ।

आलानधामदृढशृंखलदत्तशब्दाः
शय्यां विमुच्य शनकैरगमन्गजेंद्राः ॥ ११९ ॥

शिथिलय कलकंठि कंठदेशात्
भुजवलयं ललिते ! मम क्व वस्त्रं ।
परिणतिमगमन्निशा यदेताः
शकटरवैः श्रवसी तुदंति रथ्याः ॥ १२० ॥

संभूय संभृतलयाः प्रवदंति तांम्र—
चूडाः सनीडरतयस्तदहं व्रजामि ।
तन्वंगि यन्मयि समाश्रितभृत्यभूये
भूयः प्रसादविधिरेष विधायिषीष्ट ॥ १२१ ॥

विश्रंभात् प्रियनवलंगमेऽपि चेतः
सर्वस्वं त्वयि रसतो मयान्यधायि ।
आनेयं मम पुनरप्यदो निशीथे
तत्स्वेच्छागृहमिदमभ्युपेहि मा वा ॥ १२२ ॥

चेतोधृत्तिर्विपुलविलसद्वागरत्नावतंसा
साऽतो योगानियतजडिम । न प्रपीडां तनोति ।
भोगिन् क्रीडाकुशलभवता यद्युपेक्ष्यंत काले
व्यालच्छाया विरचयति मे दुःखदोषं प्रदोषम् ॥ १२३

इति विटकुलटाजनस्य जैत्र—
स्मरशरभीतिकरे वियोगभारे ।
उपनतवति रात्रिपश्चिमांते
प्रणयगुरुर्वचनक्रमो बभूव ॥ १२४ ॥

आलिंगनोद्वहनमंडलितेषु कांतैः
कांताकुचेष्वनवकाशतयेव रात्रौ ।

---

१ भूलत्वे ।

सौख्यं प्रपद्य कमलेषु निशावसाये
तत्रोन्मुखी पुनरभून्नवकुड्मलश्रीः ॥ १२५ ॥

किंचिन्निमीलदसितोत्पलनेत्रकोटि—
निर्यत्तुषारकणिकासु कुमुद्वतीषु ।
कांते विधौ विधिवदस्तसमीपयाते
शोकप्रलाप इव भृंगरवो बभूव ॥ १२६ ॥

हिमरुचिसमये प्रसंगदीर्घ्या—
दुपरि विहारिणि दूरतः प्रयाते ।
मकुलितकुमुदेक्षणा कुमुद्वः—
त्यधिवसति स्म सरस्तरंगशय्याम् ॥ १२७ ॥

प्रियविरहमहेलाशोकनिश्वासदाघ—
प्रसरमलिमुखाभ्व्योम चन्द्रस्तपस्वी ।
तरुणहरिणवाही दाहभीतेरधाव
त्वरितमिव नमीपं पश्चिमस्यार्णवस्य ॥ १२८ ॥

आलिंग्य वल्लभतनू रविचक्रसंधि—
निद्रायिता विकचवारिजगंधयंधा ।
वक्षेषु शुद्धिमदधुर्जघनच्युतेषु
प्राभातिके मरुति याति विलासवत्यः ॥ १२९ ॥

समवसत परस्परेण दूर—
प्रसृततया निशि लब्धभोगपीडाः ।
वरयुवतिकुचा विभातकाले
समदमुखोन्नतयश्च चक्रवाकाः ॥ १३० ॥

रात्रौ शीतमयूखदीपभुजगाद्विषयोद्गारिणो
भीतेवार्कवियोगिनी कमलिनी निद्राछलान्मूर्छिता ।

---

१ राम्यवमाने । २ प्रगुटितकमलसुरभिवाहिनि ।

तस्मिन् कंधरकाललक्ष्मणि गते शोणाब्जगुंभन्मुखै—
रुज्झतश्वासनवप्रभातमरुता लब्धेव संचेतनम् ॥१

श्रीर्बंधकी निशि सरोरुहगेहगर्भा-
द्दोषाकरेण कुमुदाकरवेश्म नीता ।
भास्वत्प्रियस्य पुनरागमनाङ्क्रियेव
प्रत्याविवेश पुनरंबुरुहं प्रभाते ॥ १३२ ॥

अनुविधिमधिकप्रभाविनस्ते
चकित इवैप करोदहो विधातुम् ।
अवसरमवनीश्वर प्रतीच्छन्
गिरिशिखरांतरिताः खरांशुरास्ते ॥ १३३ ॥

भूयस्तन्मुखमिलितोरुहारयष्टि
निर्भजन्बिसलतिकामिव प्रजग्धाम् ।
वामोरूघनकुचभारचक्रवाको
व्युष्टायां निशि नृपचंद्र मा पिपीडाः ॥ १३४ ॥

निधुवननिधिमुख्यं मौखमग्रे सखीनां
स्वगरुवदतिशब्दं खंडशस्तां प्रतुंडे ।
अवनतवदनाब्जां लज्जया देव ! देवीं
दरहसितमनोज्ञां पश्य पर्यंतदृष्ट्या ॥ १३५ ॥

अन्वेष्टुं निजनियमं तमोऽपहारे
ये रात्रेरखिलकलाःसुजागरीताः ।
प्रत्यग्रोन्निर्मिषिदृशा त्वया त एते
दृश्यंतां नृप कुलरत्नदीपाः ॥ १३६ ॥

अखिलदिक्पतिभिः प्रतिवाहितां
नयनपद्मविकाशमियं तव ।

---

१ नियमं प्रति । २ दिवसम् ।

अभिनिवेष्टुमिवांगणतोरण—
स्थितवती कमला प्रतिवीक्ष्यते ॥ १३७ ॥

तेजस्विनः स्वमदशाभृतस्ते
ये प्रत्यया दृष्टिपथप्रयाताः ।
भयादिव भ्रांतिमथो यथोक्तां
कुर्वंतु ते सर्वजनीनसिद्धिम् ॥ १३८ ॥

प्रस्वेदांबुलवान् मुखादपनुदन्नामीलयन् लोचने
लोलालामलकावलीं विलुठयन् भंजन् नितंबस्थलम् ।
नारीणां सुरतावसानसमये कामीव कुर्वन्प्रियं
प्रीत्यै देव ! तवांतिके प्रसरति प्राभातिको मारुतः॥ १३९ ॥

तनुजिनपतिपादद्वंद्वता आरविंदं
विकसदनवसाने मानसे तत्र भूयः ।
सरलसरसचेताः श्वेतलक्ष्मीविलासे
स्वमवनिपतिहंसो हंसलीलां भजेयाः ॥ १४० ॥

इत्याविष्कृतपंचमध्वनिवचः श्रोत्रामृतं श्रीपतिः
पीत्वेव प्रतिपन्नबोधविभवो मंद्रागतं वंदिनाम् ।
उत्तस्थौ शयनाद्विकीर्णकुसुमभ्रांतालिकोलारवैः
चक्री विभ्रममोदरः स्वरविहाह्वीत्येव फूत्कारिण.॥ १४१ ॥

इति श्रीवादिराजसूरिविरचिते श्रीपार्श्वजिनेश्वरचरिते
महाकाव्ये वज्रनाभचक्रवर्तिप्रबोधो नाम
षष्ठः सर्गः ।

---

१ प्रात ।

# सप्तमः सर्गः ।



*तमोमहिषमाहत्य बलिहारं दिशामिव ।
तस्यासृग्भिश्चकारार्कः प्रसरल्लोहितच्छविः ॥ ८ ॥

भानुमत्करसंबाहादुत्थितायास्तदा श्रिय ।
भ्रमरैः कमलावासे मंजीरैरिव सिंजितम् ॥ ९ ॥

अशोकपल्लवैस्तस्थ्यालंबिता इव कानने ।
बजीवप्रसूनेषु द्वैगुण्यमिव संश्रिताः ॥ १० ॥

उन्नावयंतः सांगत्या रक्तत्वं नदीजले ।
तलमाणिक्यदीप्तीनामुत्क्षुपप्रक्रियामिव ॥ ११ ॥

शिबिरद्विरदांगेषु कुर्वाणाः पश्यतां नृणाम् ।
कुंभोत्तमितासिंदूरपरागप्रसरभ्रमम् ॥ १२ ॥

प्रवालपाटलाच्छायेष्वधरोष्ठेषु योषिताम् ।
चुंबनव्रणनिर्मुक्तरक्तधारोपमावहाः ॥ १३ ॥

गाढालिंगनभग्नस्य कश्मीरस्य नतभ्रुवाम् ।
स्तनेषु रागं तत्प्रीत्येवोत्कुर्वाणाः कृतस्थितिम् ॥ १४ ॥

श्च्योतल्लाक्षारसाद्धातुरुचिसर्वस्वतस्कराः ।
द्यावापृथिव्योर्व्याप्त्यास्ते प्रसस्रू रविरश्मयः ॥ १५ ॥ कुलकम्

भास्वरोदयपीठस्थौ पृथवीपतयोपही ।
पादन्यासमकुर्वातामुच्चैर्मूर्ध्सु भूभृताम् ॥ १६ ॥

तेजसानुक्रमोष्णेन रथस्थो रविचक्रिणौ ।
आयातां दिगभिव्याप्तौ राजश्रीहारिणावुभौ ॥ १७ ॥

---

* इत पूर्वं सप्तश्लोका नोपलभ्यन्ते लिखितपुस्तके, न जाने किं कारणमत्र

चचाल चक्रिणश्चम्वा चकितास्य चमूर्द्विषाम्।
शिबिरान्निर्गमे तस्या· कायेभ्यो निर्ययाविव ॥ १८ ॥

तेजोभिर्ववृधे तस्य सर्वदिक्षु प्रतिक्षणम्।
आलिंगनादिवारिस्त्रीनिश्वासप्रसरोष्मणाम् ॥ १९ ॥

अदृदयो बलसंपाताज्जयमाशंसतो भिया।
पुष्करेष्वेवाभवत्तस्य नूनं सेनापरिच्छदः ॥ २० ॥

सेनयाऽन्नूनया तस्य निघ्नप्रोद्धतभंगया।
सीतोदयेव सीतोदा प्रत्यासाद्यनुरक्तया ॥ २१ ॥

तीरद्रुमावलीछद्मात् श्यामचारित्तरंगिणी।
उत्पश्येव तमायातमद्राक्षीत्प्रसवेक्षणा ॥ २२ ॥

तत्सैन्यतूर्यसंघातघातोत्थतुमुलध्वनिम्।
नादेयप्राद्रिनिर्घोषः स्वपोषमपुपत्पुन· ॥ २३ ॥

अलेभपुष्करोद्गीर्णस्वच्छातुच्छच्छटाजलैः।
नद्योषोत्तंभितास्तस्य ध्वजास्संनिधिहृष्टया ॥ २४ ॥

कूलवृक्षे निषस्तन्यं तत्र तत्र मनोहृदे।
तस्येत्यसूचयत् सिंधुर्भंगप्रक्षेपणाकुलम् ॥ २५ ॥

तीरपर्यंतसंकीर्णपद्मरागमरीचिभिः।
पुरस्कृतानुरागेव निम्नगा तस्य निर्बभौ ॥ २६ ॥

फेनलैरानर्नव्योम्नि भंगैरत्युत्य पातिभिः।
मुखरैरत्यगात्तस्य हयसेना महानदी ॥ २७ ॥

तादृश्यगाधता तस्या महत्येव यदीच्छया।
त्रिस्त्रावा यदि निर्भक्ता वज्रनाभदयोप्यसौ ॥ २८ ॥

तत्पद्मनीपलाशानामवकाशः किमुच्यते।
तद्घटे चक्रवर्तिस्त्रीस्तना यद्येभुरुद्घटाः ॥ २९ ॥

---

१ उपधाता।

का तदाताम्रपद्मानां गुणेयत्ता यदूहिरे ।
एकैकेन सकृच्चक्रिपाणिपादमुखश्रियः ॥ ३० ॥

वेलावने समावास्य स सेनां मानवाधिपः ।
रक्ताद्वारेण सीतोदामुपतस्थौ रथास्थितः ॥ ३१ ॥

तत्राकृत्रिमसंतप्तचामीकरगृहोदरे ।
जिनदेवप्रतिच्छंदो भक्त्या तेनाभितुष्टुवे ॥ ३२ ॥

नमस्ते सार्व ! सर्वज्ञ ! सर्वोत्तमगुणात्मने ।
सर्वद्वंद्वविनिर्मुक्त ! सर्वकैवल्यभूतये ॥ ३३ ॥

प्रकृतिस्थ ! नमस्तुभ्यं प्रकृतिप्रत्ययात्मने ।
प्रकृत्युपरमोद्गीर्णपरमानंदमूर्तये ॥ ३४ ॥

परमात्मानमानुत्य स इत्थं पार्थिवेश्वरः ।
रथेनाब्धिरथस्सिंधुमतिचक्राम विक्रमी ॥ ३५ ॥

शेपाक्षतैरिवोद्दामभृंगीमंगलगीतयः ।
अवाकिरन् पुरस्तस्य प्रसूनैस्तटवल्लयः ॥ ३६ ॥

मुदमातेनिरे तस्य स्यंदने वद्धदृष्टयः ।
हिमांबुजे कुटीरस्थाः सोत्क्रीवा हंसयोषितः ॥ ३७ ॥

जलकुक्कुटसंशब्दं स निशम्य रतोत्सवे ।
कांताकंठध्वनेः स्मर्ता व्यधत्त स्मेरमाननम् ॥ ३८ ॥

तरुणारुणपद्मानि सरित्स्वच्छांभसि प्रभुः ।
स्वलोचनप्रतिच्छंदसदृशान्यन्वलोकत ॥ ३९ ॥

तटस्था रत्नभूस्तस्याः समुद्धाजिष्णुरश्मिभिः ।
भयेन जिष्णवे तस्मै करार्पणमिवादधे ॥ ४० ॥

प्रतिबिंबगतः प्रेंखदूर्मिभित्तिषु सर्वतः ।
समावृत इवाधावत्तद्रथो रथकैट्यया ॥ ४१ ॥

---

१ सर्वस्मै हितकर । २ कर्मनाशोद्भवानंतानंदस्वरूपाय । ३ रथानां समूहेन

प्रत्यग्रवीचिपर्यायप्रतिमातयिनो हयाः।
स्वतः स्वतो जवेनेव सरथा पुरतो ययुः॥ ४२॥

गत्वा द्वादश वेगेन योजनानि नदीजले।
तस्थे रथेन केनापि स्तंभितेनेव भूपतेः॥ ४३॥

स्यंदनस्य स्खलां वृत्तिमसहिष्णुं महीपतिम्।
भयगद्गदया वाचा जगाद रथचोदकः॥ ४४॥

इतः परमियं भूमिर्न रथस्य नरेश्वर!।
अनादिवस्तुस्वाभाव्यमत्र विधिर्नियामकम्॥ ४५॥

नह्यूर्जितप्रतापं त्वां प्रत्यवस्थातुमीश्वराः।
मनसापि कुतो नाम क्रियया दैत्यमानवाः॥ ४६॥

आयुष्मन्! प्रेष्यतां तस्माद्भवद्विजयिनामभूत्।
बाणस्तेनैव साध्योऽसौ मागधो व्यंतराधिपः॥ ४७॥

आत्मभाषितमाकर्ण्य कृष्टमाकर्णगह्वरात्।
स शरं मोचयामास धनुषा मनुपार्थिवः॥ ४८॥

तस्य निःपततां धाम्ना व्योम निःदीपगर्भितम्।
भयान्निमीलनं चक्रे शीतोदादेवतादृशाम्॥ ४९॥

तत्तेजः प्रसरं द्रष्टुमक्षमाश्चक्षुषां पथि।
उत्पुच्छकं जले मग्ना बभूवुर्जलपक्षिणः॥ ५०॥

स बाणः समुपेत्याशु मागधस्य महोजसः।
मणिहर्म्यशिरस्तुंगं जघान घनघर्मना॥ ५१॥

अमरास्तन्निपातोत्थध्वानसंपादपीडितान्।
पिदधुः पाणिभिः कर्णान् भयाद्धाकारकारिणः॥ ५२॥

भूर्पतीनं समादाय भूमिनाथस्य पत्रिणम्।
आस्थानस्थायिपार्श्वस्थो व्यंतरेशो व्यदर्शयन॥ ५३॥

१ उपशामिनम्। २ बाणम्।

तद्दृष्टसमयोद्दीर्णक्रोधघूर्णद्विलोचनः ।
प्रोद्यत्कहकहाध्मानं प्रहस्येदमचीकथत् ॥ ५४ ॥

ईदृशी तादृस्येव युज्यते साहसक्रिया ।
यशसैवार्थिनो नित्यं न प्राणैः प्राणभृत्प्रियैः ॥ ५५ ॥

विगाहमाना व्योमाग्रमद्य मत्कीर्तिवल्लरी ।
अनेनास्त्रप्रकांडेन किं न चंडेन खड्यतेमम् ॥ ५६ ॥

तोमरप्रणिधेस्तस्य जलातिक्रमकारिणः ।
अमी रत्नविशेषाः किं नोपस्थानं प्रकुर्वते ॥ ५७ ॥

इति क्रोधोपहासाभ्यां यथार्थमेव भारतीम् ।
अभिजल्पंतमाचख्युस्तमन्ये ख्यातपौरुषाः ॥ ५८ ॥

इयमत्युज्वला लक्ष्मीर्यवतः प्रथितोन्नतेः ।
सोदामनीव जीमूतात् कस्य शक्या पृथक्क्रिया ॥ ५९ ॥

व्योमेवाक्रांतविश्वात्ते बलाद् दुर्लंघ्यपौरुषात् ।
हठादाक्रष्टुमीष्टे कः श्रियं चंद्रकलामिव ॥ ६० ॥

तस्य का वा भवेन्न श्रीर्यस्तु ते संगरोत्सवे ।
चंडदोर्दंडकंडूतिकंडूयनभरक्षमः ॥ ६१ ॥

अमर्त्यनिवहावार्यवीर्यव्यतेस्तवेदृशी ।
मानवानुत्तमे तस्मिन्नाक्षेपोक्तिरयुक्तिका ॥ ६२ ॥

अतस्तुभटसंमर्दलब्धविक्रमसिद्धयः ।
ईप्सितार्थक्रियासिद्धो देव ! प्रेष्यामहे वयम् ॥ ६३ ॥

बहलप्रस्तृतोद्दामधूमप्रत्यूहलोचनः ।
दूरादभ्येत्य दावाग्निं कोतिक्रमितुमीश्वरः ॥ ६४ ॥

शुष्कांबुतलमात्रस्थभ्राम्यत्तिमितिमिंगिलम् [1] ।
करवाम यदीच्छा ते शीतोदाकुहरोदरम् ॥ ६५ ॥

---

1 मीनमकरनक्रचक्रादे ।

निरस्य नीरसं वारिक्षारमर्णवगह्वरम् ।
संपादयेम संपूर्ण तव देव यशोऽमृतैः ॥ ६६ ॥
मेरुमुन्मील्य भूगर्भात् प्रभावं तत्र शाश्वतम् ।
कीर्तिकल्पलतालंबस्तवभुत्तंभयेम ते ॥ ६७ ॥
अपारभान्मतः शुभ्राः बलादाहृत्य भावलीः ।
हारीकृताभिस्ताभिस्ते भूषयेम भुजांतरम् ॥ ६८ ॥
धीरमित्यभिधायोर्वराकाराविष्कृतोद्यमाः ।
अभूवन्युद्धसंनद्धा मागधानीकनायकाः ॥ ६९ ॥
प्रकोपताम्रया दृष्ट्या खड्गकस्यामिपश्यतः ।
प्रागेवाजनि संग्रामात् स ध्रुवं लिप्तलोहितः ॥ ७० ॥
कैश्चिद्वज्रमया दंडा दृढमुष्टिनिपीडिताः ।
स्वीचक्रुर्विक्रमोद्गारैर्व्यथयेव परिभ्रमम् ॥ ७१ ॥
दृढज्याकष्टिकर्मण्याः कोदंडं मंडलीकृतम् ।
जयश्रीसंप्रवेशाय दधुर्द्वारमिवापरे ॥ ७२ ॥
रत्नसंवाहिनश्चान्ये तत्प्रभामध्यवर्तिनः ।
चकाशिरे भृशं दृप्यतेजः पल्लविता इव ॥ ७३ ॥
केचिन्निसर्गनिस्त्रिंशा निस्त्रिंशान् दधतः करैः ।
प्रत्यासन्नरणप्रीत्या बभूवुर्द्विगुणा इव ॥ ७४ ॥
भास्वतः स्वप्रतापस्य परिवेषमिवोचितं ।
गदावर्तनवैदग्ध्याद्वीराः केचिद्वितस्तरुः ॥ ७५ ॥
क्रोधहासोल्लसद्दंतदीप्तिभिस्तत्क्षणान्मुखमम् ।
अभिषिक्तमिवोदस्थैर्विवव्रुर्विक्रमं भटाः ॥ ७६ ॥
आपतन्मधुपालापैरालिप्तहरिचंदनाः ।
केचिद्वाचालयामासुरिव स्वं प्रथमोद्यमम् ॥ ७७ ॥

---

१ मागधसेनापतय । २ स्वभावक्रूर ।

परे तु स्फुरितोद्दामकुंतदंतुरपाणयः ।
विरेजिरे नातिक्रम्य विक्रमांकुरिता इव ॥ ७८ ॥

सिंहनादकृतः केचिदुद्वेलरणरंहसः ।
प्रायः पिशुनयामासुः गांभीर्यं शौर्यवारिधेः ॥ ७९ ॥

स्फारमास्फालयंति स्म स्वर्ग्याः केचिद्भुजैर्भुजान् ।
अमांतमंतः संग्रामरागं रोद्धुमिवोद्धताः ॥ ८० ॥

रणरागोदयस्फीतगात्रस्फुटितभूषणाः ।
केचित्सत्यापयंते स्म नैर्ग्रंथ्यं युद्धदीक्षिताः ॥ ८१ ॥

इत्थं परिषदा सार्द्धमुद्युक्तं परिषद्बलम् ।
निषिध्य कुलवृद्धास्तमवोचन्न विचारिणम् ॥ ८२ ॥

प्रभो तव किमुक्ताहं पुरः कर्तव्यवेदिनः ।
तथाप्यवसरोऽयं नः स्वाधिकारप्रवर्तने ॥ ८३ ॥

अविविच्य क्रिया नैव श्रेयसे बलिनामपि ।
गजोऽपि निपतेत् गर्ते वृत्तस्तमसि चर्यया ॥ ८४ ॥

अशक्यवस्तुविषयः प्रत्यवायकृदुद्यमः ।
अंघ्रिणा क्रमतोऽप्यग्निमग्निस्फोटः स्फुटायते ॥ ८५ ॥

स्वैरमन्यदतिक्रम्य प्रवर्ततामिलं बली ।
कालक्रमोपपन्ना तु नियतिः केन लंघ्यते ॥ ८६ ॥

प्रवृत्तो व्यवहारोऽयं देवनिश्चायमन्यथा ।
यदभूवन्भवद्वंश्याश्चक्रभृद्रथः करप्रदाः ॥ ८७ ॥

इत्याप्तवाक्यं प्रामाण्यात् प्रसन्नो मुक्तमत्सरः ।
रथस्थमुपनम्ये स भूपर्भु व्यतरत्प्रभुः ॥ ८८ ॥[१]

व्यनमज्जिनयोदारजयकारकृतांजलिः । स
सबंधुपरिवारस्स क्रमयोश्चक्रवर्तिनः ॥[२] ८९ ।

१ रत्नमानयते स्म । २ पादयोः ।

द्यावेवर्षं तदा पोष्णीं वृष्टिमाकर्णयद्दृशाम् ।
अधिचक्राम दिक्चक्रममंदो दुंदुभिध्वनिः ॥ ९० ॥
अनेकरागसुव्यक्तिश्रव्याभोगमनोहरम् ।
रथांगपाणिना साकं मधुरं किन्नरा जगुः ॥ ९१ ॥
अनेन निकचाताम्रकुशेशयदृशा तदा ।
आलुलोके तदाश्चर्यं नूनं निमग्नया तया ॥ ९२ ॥
आनीय सारवस्तूनि साकं तरसायकेन सः ।
इदं प्रश्रयिता वाचा बभाषे पृथिवीश्वरम् ॥ ९३ ॥
कुंडलद्वयमेतत्ते मंडनं देव ! गंडयोः ।
भास्वतोर्मध्यगस्येंदोर्लीलामातनुतां मुखे ॥ ९४ ॥
स्वतः स्वभाव्यभूभारं बिभ्रतस्तत्र कंधरम् ।
अयमालिंगतु स्फारो हारदशेप इव प्रिय ॥ ९५ ॥
देव ! किं बहुना यत्र कुलक्रमसमागतम् ।
तवैव वस्तु सर्वं तदन्यत्र शुभकर्मणि ॥ ९६ ॥
इति ब्रुवंतं संतोष्य प्रस्थाप्य च तमीश्वरः ।
प्रत्याजगाम शिविरं कुबेरोपमविक्रमः ॥ ९७ ॥
वैजयंत्या पुनः सिंधुं प्रविश्य वसुधेश्वरः ।
देवं वरतनुं चक्रे विक्रमी स्वक्रमानतम् ॥ ९८ ॥
अलाघ्यं कवचं नव्यं चूडारत्नमयत्नजम् ।
ददौ वरतनुस्तस्मै सुस्मेर मणिकंकणम् ॥ ९९ ॥
रत्नोदयाप्रविष्टस्य सीतोदां तस्य संभ्रमात् ।
सर्ववस्तुप्रदानेन प्रभासः प्रणतोऽभवत् ॥ १०० ॥
करदीकृतसीतोदावास्तव्यामरनायकः ।
प्रतस्थे विजयार्द्धाय विजयी विजयात्मजः ॥ १०१ ॥

१ स्वपादयोर्निम्रम् ।

वहंत्या तस्य वाहन्या तटे स प्रतिवाहया ।
प्रव्यधत्त च रक्तोदा गतप्रत्यागतक्रियाम् ॥ १०२ ॥

क्रमेणापश्यदासाद्य स राजा रजताचलम् ।
यशः स्वमिव संभूय पुरस्तात्समवस्थितम् ॥ १०३ ॥

ततः प्रसृत्य प्रथिम्ना चुंबता ककुभां मुखम् ।
कुर्वाणं द्रव्यसंबंधगुणाख्यातिमिवान्यथा ॥ १०४ ॥

शिखरैर्लिखिताशेषदिग्मुखैर्दंढपीवरैः ।
अनालंबमिवोत्तंभं बिभ्रतं व्योममंडलम् ॥ १०५ ॥

प्रस्थभूम्यः समुद्भांतैरभ्रकूटैश्च पांडुरैः ।
विहरंतमिव व्योम्नि गात्रैर्विद्याबलाश्रयम् ॥ १०६ ॥

भूभृत्सानुषु संभूतस्वच्छपानीयनिर्झरैः ।
जिगीषोस्तस्य दृष्ट्वेव भूयः प्रस्वेदकारिणम् ॥ १०७ ॥

दधतं खेचरक्रीडाकुरंगाध्यासितोदरम् ।
पर्वेंदुमिव क्वापि स्फाटिकोपलमंडलम् ॥ १०८ ॥

दूरप्रसृतया स्वस्य प्रभया वरंगामिनाम्[1]
प्रवाहयंतं संतृप्त्यै व्योमगंगामिवाग्रतः ॥ १०९ ॥

स्फीतपार्श्वतया व्योम्नि विकाशस्थितिलब्धये ।
प्रोत्सारयंतमापद्माः ककुद्भित्तारिवानिशम् ॥ ११० ॥

शुभ्रदीप्तिनिरोभास्यपरभागतयान्वितम् ।
असमानमिवाजस्रमापातुकपतत्रिणः ॥ १११ ॥

विशालभित्तितटिगप्रतिबिंबप्रयोजनम् ।
दर्पणग्रहणे यत्नं श्लथयंतं नतभ्रुवाम् ॥ ११२ ॥

स्फुरदातपसंपृक्तसूर्यकांतोद्गतानलम् ।
दर्शयंतं स्वगात्रेषु तत्प्रतापमिवाश्रितम् ॥ ११३ ॥

---

१ विजयार्द्धम् ।

एकशो निर्मलानेकसानुभित्तिगताकृतीन्।
बहुरूपभृतो विद्यावारयंतमिव द्रुमान्॥११४॥आदिकुलकम्।

तत्पर्वतवनोपांते विशश्राम नरेश्वरः।
आर्यखंडगतास्तत्र भूभृतस्तु निषेविरे॥ ११५॥

विजयार्धकुमारोऽपि तत्प्रभावेन चोदित·।
आनर्च तं भयानम्रस्तेन भद्रासनार्चितम्॥ ११६॥

श्वेतातपत्रभृंगारहरिविष्टरचामरैः।
करप्रदानं निर्वृत्य निजधाम जगाम स॥ ११७॥

भूषणानि भुवां पत्ये चतुर्दश महौजसे।
अदापयत भीतेन कृतमालदिवौकसः॥ ११८॥

विना येन नयेनाभिर्भिद्यते न गुहामुखं।
तस्मै स च नमाचख्यौ तेनधीरूर्ध्वधीमते॥ ११९॥

आद्यंतपादगतप्रत्यागतम्।

सेनानीश्चक्रिसंदेशादारूढे हयमुत्तमम्।
दंडरत्नधरस्तूर्णमजिहीत गुहांतिकं॥ १२०॥

स्वामिनाम त्रिरुच्चार्य दृढबंधनबंधुरं।
कपाटपुटसंधानं दंडाग्रेण जघान स·॥ १२१॥

ईहावहमुखत्वेन गदया निदितालयं।
गुहागृहमुखं तेन विदधे विवृताश्रयं॥ १२२॥ गोमूत्रिका।

यावदन्यागतस्तीव्रो न गुहोष्मा स वेगिना।
अश्वेनालंघयद्दूरमन्यालंघ्यपराक्रमः॥ १२३॥

तुरंगी चतुरंगी च म्लेच्छनिर्जयनोद्यमी।
स्वभावेन स्वभावेन प्रतस्थे पृतनापतिः॥ १२४॥

---

१ अभिषेकपात्रम्। २ आर्द्रीभूता बुद्धिर्यस्य सः।

तं म्लेच्छाः सर्वभावेन समरेऽसमरे चिते ।
भग्नाः शरण्यमाजग्मुः पीडने पीडनेरिनाः ॥ १२५ ॥

स्मदृश्रीप्रदानेन समदृश्री स संयुगे ।
मनुजः स्वामिनः स्वैरमनुजग्राह तानयं ॥ १२६ ॥

तेभ्यो द्रविणमादाय मनोमदनवाहितं ।
आययौ स नृपोपांतमनोमदनवाहितम् ॥ १२७ ॥

शांतोष्मणि गुहागर्भे स सम्राट् तत्र सेनया ।
अगादशस्यसंख्यानां सुधियां स्वरसेनया ॥ १२८ ॥

भित्तिलेख्यौ स्थिरे जाते काकणीमणिनिर्मितौ ।
तत्र रूक्प्रसरे जाते पुष्पदंतौ तमोपहौ ॥ १२९ ॥

सा सेना समयामास गुहासिंधोरुभौ तदा ।
सा सेना समयामास सन्नाहे चक्रवर्तिनः ॥ १३० ॥

विहितारिविंद्रानेन विंदाऽनेनं ततो जगत् ।
यशसा वेष्टितो मानवेष्टितोऽर्मो नवेर्ष्यया ॥ १३१ ॥

तस्याजनत पयोग्रा हेमकारस्य सैनिका ।
यशोहिमकरस्यासन् सग्राममाय समुद्यताः ॥ १३२ ॥ मात्राच्युतकः

व्यूहं विरचयामास सर्वतो भद्रमात्मनः ।
येन सेनापतिः कामं सर्वतो भद्रमाद्युतिः ॥ १३३ ॥

रथेन पृथुलाताम्रपताकाभिर्द्विषां बले ।
कृतांतस्येव जिह्वाभिः सभियः प्रविभेजिरे ॥ १३४ ॥

बभूव युद्धमुद्दाम्यदखातद्बलयोर्द्वयोः ।
मंदस्यंदविनिर्मुक्तमदस्यंदवहद्द्वजं ॥ १३५ ॥ बिंदुच्युतकं ।

हेमयोगभृतो व्यूह्यवाजिनो भीमहेषिताः ।
प्रसस्रू रणभूपृष्ठे मध्यभूयोगमागताः ॥ १३६ ॥ गूढचतुर्थ

१ कृमदाशुल्डनेन । २ विदुषा । ३ वाणिना । ४ वह ।

कृततूर्यरवाक्रोशा पृतनाक्षोदपीडिता ।
पांशुच्छद्मोत्पपातेव स्वस्थानाद्वियदुर्वरा ॥ १३७ ॥

सद्यो वाद्यरवो व्योम्नि जजृंभे धीरसुखरन् ।
सद्योवाद इवास्थास्नु संगरोद्वेगकारणम् ॥१३८॥ अक्षरच्युतकम् ।

अरीणामुत्तमांगानि निशिताननतोमरैः ।
चिच्छेद निश्चयात्कश्चित् व्योमस्थैर्विनतोमरैः ॥ १३९ ॥

तरवारिभृतः सद्यो वीराः कातरवारिणः ।
का निःकंपेति रे वाचो भटैस्संपेतिरे परैः ॥ १४० ॥

अंतःशून्या बृहन्नागपाशसंनहनाहवाः ।
अनवद्या घनध्वानवर्षाणि केचित् प्रजह्रिरे ॥ १४१ ॥

अंतःशून्या बृहन्नागपाशसंनहनाहवाः ।
अनवद्या घनध्वानैः कोणैः केचित्प्रजह्रिरे ॥१४२॥ अक्षरव्यत्ययः ।

अर्करिपुधियो गाढाकृष्टैरप्यन्यकैर्हता ।
स वैरिपु वियोगादकृष्टो दत्वाऽभ्यगुर्भृते ॥ १४३ ॥

वितेनुर्वसुधाचक्रं वरवारणवाजिनः ।
आहवे निहतास्माकं वृत्तया रथकचया ॥ १४४॥ अपवर्गः ।

निस्त्रिंशच्छिन्नभूलग्नशिरसो विषयं दृशोः ।
अरिमभ्यगुरच्छन्नाः कबंधाः शौर्यशालिनाम् ॥ १४५ ॥

असहिष्णुतया युद्धे चिलातावर्तभूभृत ।
पूर्वमाराद्वयस्यानामहींद्रानानुसस्मरः ॥१४६॥ अकचवर्गः ।

अमी मेघमुखा व्योमव्याप्तवारिमहारवम् ।
ववर्षुर्विपुलोच्छाया गिरिडंबरगोपकम् ॥ १४७ ॥

चिकीर्णश्रमरत्नस्थं कटकं चक्रवर्तिन ।
छत्रं जुगोप नद्यूहैः प्लवमानं महाजले ॥ १४८ ॥

वज्रसूचीमुखोद्भिन्नं छत्रधारगतांबुना ।
तत्सर्वं नृपतेर्वेश्मकुर्वन् तत्समीपगाः ॥ १४९ ॥
किं केनेत्यसहे तीक्ष्णं कथयत्यथ राजनि ।
क्षितिग्रस्तं जलं यज्ञे नतास्ते तदरातयः ॥ १५०
सारवस्तुप्रदानेन म्लेच्छैर्विनतमौलिभि ।
सारवस्तुप्रभात्यै रक्तोदा देवता ययौ ॥ १५१ ॥
साभिषिच्य तमुर्वीशं रिपुसंभद्रमासनम् ।
दीप्तरत्नमयं तस्मै प्रददौ भद्रमासनम् ॥ १५२ ॥
निषधं प्राप्य गोशीर्षचंदनाद्यैस्तटीशिना ।
अनुजग्राह स पश्चात्पूजितो दिव्यभेषजैः ॥ १५३
रक्ता देवी नृसिंहाय तस्मै सिंहांकमासनम् ।
भयाददायि याताय कृत्वा प्रागभिषेचनम् ॥ १५४ ॥
सदेवमानवानीकैरायया वृषभाऽचलम् ।
सदेवमानवानीयोऽनुतस्यावन्यजन्मनि ॥ १५५ ॥
तत्रालिख्य समुद्रामशववीर्यश्रुतादिकम् ।
सकांडकप्रपातारव्यगुहापार्श्वमुपाययौ ॥ १५६ ॥
अदायि तस्मै स्त्रीरत्नं नयते गगनेचरैः ।
अतोऽदायि नतोदारैरयत्नं दायिने नरैः ॥ १५७ ॥
पृतनापतिना पार्श्वे मंडलाधिपमंडलीम् ।
निर्जित्योद्घाटितद्वारां स गुहामत्यगात्प्रभुः ॥ १५८ ॥
नाट्यमालस्तमासाद्य भृंगारच्छत्रचामरैः ।
अपूजयत्समेतोऽन्यैरादरात्तत्र चामरैः ॥ १५९ ॥
ऊर्जस्वलां म्लेच्छकुलस्य लक्ष्मीं
निर्जित्य विश्वां पृतनेश्वरेण ।
पतिर्भुवामश्वपुरं प्रतस्थे
समुन्नतः किंनरगीतकीर्तिः ॥ १६० ॥

वियदविरलयानव्यंतरैर्व्योमगाहे—
श्वलति सकललक्ष्मीधाम्नि निर्भक्तिसीम्नि ।
नरतुरगरथेभैरुच्चलत्सूर्यघोषै—
रखिलमवनिचक्रं व्यानशे मानवेशे ॥ १६१॥

तेजस्वानुदयी दयार्णवनिधिर्गीर्वाणसेव्यक्रमः
क्रीडानिर्जितषड्विभागवसुधाचक्रस्स चक्रेश्वरः ।
प्राप्य प्रौढमहोत्सवं हयपुरं पौरैः समभ्यर्चितो।
दीर्घं यंधुसुहृत्समूहसदृशीं पुण्यादभुंक्त श्रियम् ॥१६२ ॥

इति श्रीवादिराजसूरिविरचिते श्रीपार्श्वजिनेश्वरचरिते
महाकाव्ये वज्रनाभचक्रवर्तिदिग्विजयवर्णनंनाम

सप्तमः सर्गः ।

---

# अष्टमः सर्गः ।



विकस्वरांभोरुहसन्निभाननं
घनस्तनोत्तंभितहेमयष्टिकम् ।
मनो मुदं तस्य ततान संततं
नतभ्रुवां पण्णवतेः सहस्रकम् ॥ १ ॥

चतुः पराशीतिकलक्षसंख्यया
महागजेन्द्राश्वमिता मदोद्धताः ।
व्यभासयंस्तद्भ्रवनांगणक्षितिं
समुद्भमद्भृंगमदांबुपिंछेलाम् ॥ २ ॥

जात्यश्वकोट्यश्वसरेलयाना
दशाष्ट चोत्कृष्टजवाः प्रतीताः ।
अशेषदीक्षारगताः प्रतेनुः
प्रसह्य तद्वैरिमनः प्रकंपम् ॥ ३ ॥

भयानमन्मौलिभरेण नित्यं
निष्पीडितावुद्धिकचाञ्जलीलो ।
बभूवतुस्तच्चरणौ प्रणांकौ
द्वात्रिंशता राजसहस्रकेण ॥ ४ ॥

प्रभाविरल्लम्भ्यितिरत्नसंचयं
सुवर्णधान्यादि च तस्य धीमतः ।
विभज्य पूज्यस्य मतं महीभृतां
नवापि नित्यं निधयो वितेनिरे ॥ ५ ॥

चतुर्दशानुत्तमरत्नराजितां,
स बिभ्रदुद्दामगुणाश्रयां श्रियम् ।

---

१ अतिभ्ररन्यान्नाम् । २ दीक्षारा – अश्ववारा ।

वसंतलक्ष्मीगुणसंदिदृक्षया
जगाम पौरैर्वनपालचोदितः ॥ ६ ॥

वनप्रवेशे मधुसंभृतश्री—
र्महीभुजो दृष्टिपथाग्रवर्ती ।
चूतोऽहरच्चित्तमुदात्तगीत—
भृंगावलीमंजुलमंजरीकः ॥ ७ ॥

प्रवालभारोद्वहनादिखिन्न—
मुन्निद्रमानांकुरचारुशाखम् ।
अवाप्य मित्रं सहकारिणं त्वां
अयेत्सहेलं सहकार मारः ॥ ८ ॥

विकासलीलासुरभं मनोभवो
भवंतमभ्यस्यति संश्रितो धनुः ।
वसंतमाकंदकथं तदन्यथा
शिलीमुखोत्पादनिपात्यनिस्यता ॥ ९ ॥

तदस्त्रसूचीसदृशैर्दिशां मुखे
ससन्मुखेराम्रसुकर्मपत्रकैः ।
भवानतस्थानपि कान्त लंघये-
न्नवांकुरैः किंकरकां मनोभव. ॥ १० ॥

भवानपि त्वं सहकारजातिः
सयोवनानामसि कल्पवृक्ष ।
तनोपि तेषां यददाक्यलोभ्यं
तनूदरीणामभिमानभंगम् ॥ ११ ॥

ध्रुवं त्वमुद्दीपयसि स्मराग्नि—
मालोलशाखां मलयानिलेन ।

१ द्रु आम्र ।

